त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे नराभिमानिनि त्वयि । एवं जीवति सति कर्म न लिप्यते कर्मणा न लिप्यस इत्यर्थः । नान्यथेतोऽस्ति । इतोऽस्माद्यथोक्तप्रकारादन्यथा प्रकारान्तरं नास्ति । एको ज्ञानमार्गो द्वितीयः कर्ममार्ग एवं प्रकारद्वयादन्यत्प्रकारान्तरं नास्तीत्यर्थः । देवताभक्तिरप्युभयात्मिकैव । अतो न विरोधः । एवं चेदशुभं कर्म न लिप्यते । केचिदेवं योजयन्ति—इह लोके कर्माणि यज्ञेन दानेनेत्यादिना मुक्तिसाधनत्वेन विहितानि कर्माणि कुर्वन्नेव शतं समाः संवत्सराणि जिजीविषेदिति व्यत्ययः । एवमिहैवं त्वयि वर्तमाने सति तव मुक्तिरस्त्विति शेषः । नान्यथेतोऽस्ति । इतः प्रकारादन्यथा मुक्तिर्नास्तीत्येतदुक्तं भवति । यथा स्वर्गप्राप्तेर्नानाभूता विशेषास्तथा मुक्तेर्न मार्गभेदोऽस्त्यपि त्वेक एव मार्गो ज्ञानलक्षणोऽन्यथा प्रकारान्तरं नास्ति येन प्रकारान्तरेण विद्यमानेन कर्म लिप्यते तथा प्रकारान्तरं नास्तीत्यर्थः । अतः शास्त्रविहितान्यग्निहोत्रादीनि कर्माणि कुर्वन्नेव जिजीविषेदिति । कथं पुनरिदमवगम्यत आद्येन मन्त्रेण ससंन्याससज्ञाननिष्ठोक्ता द्वितीयेन तदशक्तस्य कर्मनिष्ठेति ज्ञानकर्मणो विशेषोपरोधं पर्वतसर्षपवदेवोक्तं न स्मरसि किमित्याद्युक्तम् । यो जिजीविषेत्स कर्म कुर्वन्नेवेति । ईशा वास्यमिदꣳ सर्वं यत्किंच जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनमिति । तेन जीविते मरणे वा गृधिं मा कुर्वित्यरण्यमियादिति पदमतो न पुनरियादिति व्यासशासनात् । उभयोः फलभेदं च वक्ष्यति । इमौ द्वावेव पन्थानावनुनिष्क्रान्ततरौ भवतः । क्रियापथश्चैव पुरस्तात्संन्यासपथश्च तयोर्न्यास एवात्यरेचयदिति तैत्तिरीयके ।

द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः ।
प्रवृत्तिलक्षणो धर्मो निवृत्तिश्च सुभाषितः ॥

इत्यादि पुत्राय विचार्य निश्चितमुक्तं श्रीव्यासेन वेदाचार्येण ।
श्रीभगवता—लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन(ण) योगिनाम् ॥ इति ।
विभागं चानयोर्दर्शयिष्यामः ॥ २ ॥

अथेदानीमविद्वन्निन्दाऽऽरभ्यते विद्वत्प्रशंसार्थम्—असुर्या नाम त इति । परमात्मभावमद्वयमपेक्ष्य देवादयोऽप्यसुरा असुषु रमन्त इति । तेषां संभूता लोका असुर्या नामशब्दः प्रसिद्धवचनस्ते लोकाः कर्मफलानि जन्मानि येषु लोक्यन्ते दृश्यन्ते भुज्यन्त इति । अन्धेनादर्शनात्मकेन

तमसाऽज्ञानलक्षणेनान्धकारेणाऽऽवृता आच्छादितास्तान्स्थावरान्ता-ल्लोँकांस्ते प्रेत्य मृत्वेमं देहं परित्यज्याभिगच्छन्ति । यथाकर्म यथाश्रुतं ते तान्गच्छन्ति । ते क इति तानाह—ये के चाऽऽत्महनो जना इति । आत्मानं घ्नन्तीत्यात्महननमात्मभेददर्शनं तत्कुर्वन्ति ते केऽविद्वांसः स्वस्वरूपाविदस्तद्विपर्ययेण विद्वांसो मुच्यन्ते न त्वात्महनः ॥ ३ ॥

तर्हि तत्कीदृशमात्मतत्त्वमिति तदाह–अनेजदेकमिति । आत्मदेवत्या त्रिष्टुप् । अतिवेगवान्वायुः प्रसिद्धस्ततो हि वेगवत्तरं मनस्ततोऽप्यतिवे-गवत्तरमात्मतत्त्वं कथं विरुद्धमिदमुच्यते निश्चलं जवीय इति । नैष दोषो निरुपाध्युपाधिमत्त्वोपपत्तेः । तत्र निरुपाधिस्वरूपेणोच्यते—अने-जदेकमिति । सोपाधिस्वरूपेणोच्यते–मनसो जवीय इति । मनसो जवेनान्तःकरणस्य संकल्पादिलक्षणस्योपाधेरनुवर्तमानात्तत्र प्रवृत्तिश्च व्यर्थं पुरतः पुरतश्चाऽऽत्मतत्त्वं प्रकाशत इति ज्योतिर्ब्राह्मणे प्रसिद्धम् । इहैव दुःस्थस्य मनसो ब्रह्मलोकादिदूरसंकल्पनं नानागमनं क्षणमात्रा-दित्यतो मनसो जविष्ठत्वं लोके प्रसिद्धम् । तस्मिन्मनसि ब्रह्मलोकादि-दूरं गच्छति प्रथमं प्राप्त इवाऽऽत्मचैतन्याभासो गृह्यते । अतो मनसो जवीय इत्याह । किंच नैनद्देवा आप्नुवन्निति । एतदात्मतत्त्वं देवा द्योतन-साधनत्वात्सर्वथाऽपि तदात्मतत्त्वं चक्षुरादीन्द्रियाणि देवा नाऽऽप्नुवन्न प्राप्नुवन्न विषयीकुर्वन्निति । प्रकाशविषयीकर्तुं वा श्रम एव ततस्तेभ्यो मनो जवीयः । मनोव्यवहारो व्यवहितत्वात् । नाऽऽभासमात्रमप्यात्मनो नैव देवतानां विषयो भवति यस्मान्मनसोऽपि पूर्वमर्षत्पूर्वमेव गतं व्योमवद्व्यापित्वात् । सर्वथाऽपि तदात्मतत्त्वं सर्वसंसारधर्मवर्जितं स्वेन नीरूपेणाविक्रियं सदुपाधिकृताः सर्वाः संसारविक्रिया अनुभवतीवा विवेकिनां मूढानामेकमनेकमिव प्रतिदेहं मत्याचक्षते स्वत इत्येतदाह–तद्धा-वत इति । तद्यत्प्रसिद्धमात्मतत्त्वं तद्धावतो दूरं गच्छतोऽन्यान्मनोवागि-न्द्रियप्रभृतीनात्मविलक्षणानत्येत्यतीत्य गच्छतीव । इवार्थं स्वयमेव दर्शयति—तिष्ठदिति । तिष्ठत्स्वयं सादित्यर्थः । तस्मिन्नात्मतत्त्वे सति चैतन्यस्वभावे मातरिश्वा मातर्यन्तरिक्षे श्वयत इति मातरिश्वा सर्वप्रा-णभृत्क्रियात्मकः । यदा सर्वाणि कार्यकारणजातानि यस्मिन्नोतानि प्रोतानि यत्सूत्रसंज्ञकं सर्वस्य जगतो विधारयितृ स मातरिश्वा । अपोऽप इति कर्मनाम । अपः कर्माणि प्राणिनां चेष्टालक्षणान्यग्न्यादित्यपर्जन्या-दीनां ज्वलनदहनप्रकाशवर्षादिलक्षणानि यज्ञदानहोमादीनि दधाति स्थापयति विभजतीत्यर्थः । समष्टिव्यष्टिरूपो ह्यसौ वायुर्धारयतीति वा ।

भीषाऽस्माद्वातः पवत इत्यादिश्रुतिभ्यः सर्वा हि कार्यकारणादिविक्रिया नित्यचैतन्यात्मस्वरूपे सर्वस्याऽऽदिभूते सत्येव भवन्तीत्यर्थः । न मन्त्राणां जामिताऽस्तीति पूर्वोक्तोऽर्थः ॥ ४ ॥

कंचिद्विशेषं दर्शयन्नाह—तदेजति । यस्तु सर्वाणि भूतानि यस्मिन्सर्वाणि भूतानीत्यात्मदेवतास्तित्सोऽनुष्टुभः । तदेजति । तद्यत्प्रकृतमात्मतत्त्वं तदेजत्युपाधित एजति चलति । तन्नैजति । तदेव स्वात्मतत्त्वमतो नैजति नैव चलति । अचलमेव सच्चलतीव भवतीत्यर्थः । तद्दूरे । वर्षकोटिशतैरप्यविदुषामप्राप्यत्वाद्दूर एव । तत् उ एव अन्तिकेऽतिसमीपे विदुषामात्मत्वात्तदन्तिक एव । अत्यन्तसमीप एव न केवलं दूरेऽन्तिके तदन्तरस्य सर्वस्य जगतोऽन्तरात्मैव । एष त आत्मा सर्वान्तर इति श्रुतेः । अस्य सर्वस्य जगतो नामरूपक्रियात्मकस्य तदेव सर्वस्य बाह्यतो व्यापित्वादाकाशवन्निरतिशयसूक्ष्मत्वादतो ज्ञानघन एवेति शासनान्निरन्तरम् ॥ ५ ॥

यस्तु शोधिततत्त्वंपदार्थो मुमुक्षुः सर्वाणि भूतान्यव्यक्तानि स्थावरान्तानि चेतनाचेतनान्यात्मानं स्वामन्वन्वेति सदा पश्यत्यात्मव्यतिरिक्तानि न प्रपश्यति । अपि स्वात्मन्यात्मत्वेन पश्यतीत्यर्थः । सर्वभूतेषु चाऽऽत्मानं तेषु सर्वेषु भूतेषु चाऽऽत्मानमनुपश्यति तेषामपि भूतानामात्मानमात्मतत्त्वं न पश्यति यथाऽस्य कार्यकरणसंघातरूपमात्मानं सर्वप्रत्ययसाक्षिभूतं सत्यं केवलम् । निर्गुणोऽनेनैव स्वरूपेणाव्यक्तानां स्थावरान्तानामहमेवाऽऽत्मेति सर्वभूतेषु चाऽऽत्मानं यस्तु पश्यति । ततस्तस्माद्दर्शनान्न विजुगुप्सते जुगुप्सां घृणां न करोति । गुपू रक्षणे । देहादिकं गोप्तुं न गच्छतीति वा । ज्ञानप्राप्तस्यैवानुवादोऽयम् । सर्वा हि घृणाऽऽत्मनोऽन्यद्दुष्टत्वं पश्यतो भवति । आत्मानमेव त्वनन्तेषु विशुद्धं निरन्तरं पश्यतो न प्राणादिनिमित्तमस्तीति प्राप्तमेव ततो न विजुगुप्सत इति ॥ ६ ॥

इममेवार्थमन्योऽपि मन्त्र आह सर्वासां श्रुतीनामत्रैव तात्पर्यमिति प्रदर्शयितुम्—यस्मिन्सर्वाणि भूतानीति । यस्मिन्यथोक्त आत्मनि सर्वाणि भूतानि तान्येव परमार्थदर्शनादात्मैवाभूदात्मैव संवृत्तः । परमार्थतो विजानत एवमात्मतत्त्वं विजानत एतत्तस्मिन्काले तस्मिन्नवस्थाविशेषे तत्र चाऽऽत्मनि को मोहः । मुह वैचित्ये । को मोहः कः शोकः कः संसार एकत्वमनुपश्यतः । शोकमोहौ कामबीजमजानतो भवतो न स्वात्मैकत्वं विशुद्धं गगनोपमं पश्यतः । को मोहः कः शोक इति ।

शोकमोहयोरविद्याकार्ययोः संसारमसंसारमित्यज्ञानयोराक्षेपेण संप्रदर्शनात्सकारणस्य संसारस्यात्यन्तमेवोच्छेदः प्रदर्शितो भवति ॥ ७ ॥

योऽयमतीतेन मन्त्रेणोक्त आत्मा किंलक्षण इत्यपेक्षायामयं मन्त्रः प्रवर्तते—स पर्यगादिति । आत्मदेवत्या जगती । स यथोक्त आत्मा पर्यगात्परितः समन्ताद्गात्परितो गच्छति सर्वमवगच्छति व्याप्नोति च । आकाशवद्व्यापी शुक्रं शुच दीप्तौ शुचिमद्दीप्तिमदित्यर्थः । अकायमशरीरं लिङ्गशरीरवर्जितमव्रणमक्षतम् । अस्नाविरं स्नावाः शिरा न विद्यन्ते यस्य तदस्नाविरम् । कविः क्रान्तदर्शी । नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुतेः । मनीषी मनस ईशिता सर्वज्ञ ईश्वर इत्यर्थः । परिभूः सर्वेषामुपरि भवतीति परिभूः । स्वयमेव भवतीति स्वयंभूः । येषामुपरि भवति यश्चोपरि भवति स स्वयमेव सर्वो भवतीति स्वयंभू । स नित्यमुक्त ईश्वरः । याथातथ्यतो यथातथा भावो याथातथ्यं यथाश्रुतकर्मफलसाधनतोऽर्थान्कर्तव्यपदार्थान्व्यदधाद्करोद्विहितवान्यथानुरूपं व्यधादित्यर्थः । शाश्वतीभ्यः समाभ्यः संवत्सरात्मभ्यः प्रजापतिभ्य इत्यर्थः अत्राऽऽद्येन मन्त्रेण सर्वेषणापरित्यागाज्ज्ञाननिष्ठोक्ता । प्रथमो वेदार्थः । ईशा वास्यमित्यादिना मा गृधः कस्यस्विद्धनमिति । अज्ञानिनां जिजीविषूणां ज्ञाननिष्ठासंभवे सति कुर्वन्नेव कर्माणि जिजीविषेज्जिजीविषेरिति कर्मनिष्ठा । द्वितीयो वेदार्थः । अनयोश्चिरंतनयोर्मन्त्रः प्रदर्शितः—सोऽकामयत जाया मे स्यादिति तस्याज्ञानिनः कर्माणि । मन एवास्याऽऽत्मा वाग्जायेत्यादिवचनात् । अज्ञत्वं कामित्वं च निश्चितमवगम्यते । तथा चाऽऽत्मस्वरूपावस्थानं जायाद्येषणासंन्यासेनाऽऽत्मविदां कर्मनिष्ठाप्रातिकूल्येनाऽऽत्मस्वरूपनिष्ठैव दर्शनात् । किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इत्यादिना यज्ज्ञाननिष्ठासंन्यासिनस्तेऽसूर्या नाम त इत्यादिनाऽविद्वन्निन्दाद्वारेणाऽऽत्मनः स पर्यगादिति वदन्तो मन्त्रैरुपदिष्टो ? यत्र तत्राधिकृता न कामिन इति । यथा च श्वेताश्वतराणां मन्त्रोपनिषदि—अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसंघजुष्टमित्यादि विभज्योक्तम् । ये तु कर्मनिष्ठाः कर्म कुर्वन्त एव जिजीविषवस्तेभ्य इदमुच्यते—अन्धं तम इत्यादिना । कथं पुनरिदमवगम्यते साध्यसाधनभेदोपमर्दनम् । यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः । यदात्मैकत्वविज्ञानं तत्र केनचिदपि कर्मणा ज्ञानान्तरेण वा स मूढः समुच्चिचीषति । भवतु

समुच्चिचीषयाऽविद्वन्निन्दा । तत्र च यस्य येन समुच्चयः संभवति न्यायतः शास्त्रतो वा तदिहोच्यते । दैवं वित्तं देवताविज्ञानं कर्मसंबन्धित्वेनोपन्यस्तेन परमात्मविज्ञानं विद्यया देवलोक इति पृथक्फलाश्रयणात्ततो ज्ञानकर्मणोरिहैकैकानुष्ठाननिन्दासमुच्चिचीषया निन्दापरैकैकस्य पृथक्फलाश्रयणाद्विद्यया तदारोहन्ति विद्यया देवलोकः । तत्र दक्षिणा यन्ति कर्मणा पितृलोक इति । न हि शास्त्रविहितं किंचिदकर्तव्यतामियात् ॥ ८ ॥

अन्धं तमः प्रविशन्ति । षडनुष्टुभ आत्मदेवत्याः । अन्धं तमोऽदर्शनात्मकं तमः प्रविशन्ति । के । येऽविद्यामविद्या कर्मेत्यर्थः । अविद्यामग्निहोत्रादिलक्षणामेव केवलामुपासते । तत्पराः सन्तोऽनुतिष्ठन्तीत्यभिप्रायः । ततो भूय इव ते तमः । ततस्तस्मादन्धात्मकाद्भूय एव बहुतरमेव तमः प्रविशन्ति । ते क इति । य उ विद्यायां रता ये तु कर्म हित्वा य उ एव विद्यायामेव रता ज्ञान एव रतास्ततो बहुतरमेव तमः प्रविशन्ति ।

अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः ।
तांस्ते प्रेत्याभिगच्छन्ति अविद्वांसोऽबुधा जनाः ॥ इति श्रुतेः ॥ ९ ॥

अत्रावान्तरफलभेदं विद्याकर्मणोः समुच्चये कारणमाहान्यथा फलवदफलवतोः संनिहितयोरङ्गाङ्गितैव स्यादिति—अन्यदेवाऽऽहुरिति । अन्यत्पृथगेव विद्यया क्रियते फलमित्याहुः । अन्यदेवाऽऽहुरविद्यया कर्मणाऽन्यदेव फलं क्रियत इत्याहुर्वेदाः कर्मणा पितृलोको विद्यया देवलोक इत्यादयः । इत्येवं शुश्रुम श्रुतवन्तो वयं धीराणां धीमतां वचनं शुश्रुम । ये आचार्या नोऽस्मभ्यं तत्कर्म च ज्ञानं च विचचक्षिरे व्याख्यातवन्तस्तेषामयमागमः पारम्पर्यागत इत्यर्थः ॥ १० ॥

यत एवं विद्यां चाविद्यां चेति देवताज्ञानं कर्म चेत्यर्थः । यस्तद्वेद तदुभयं ज्ञानं कर्म च सहैकेन रूपेणानुष्ठेयं यो वेद तस्यैव समुच्चयकारिण एकपुरुषार्थसंबन्धक्रमेण किं स्यादित्युच्यते—अविद्यया मृत्युं तीर्त्वेति । अविद्यया कर्मणाऽग्निहोत्रादिना मृत्युं स्वाभाविकं रागतः क्रियमाणं कर्म ज्ञानं च मृत्युशब्दवाच्यं तदुभयं तीर्त्वाऽतिक्रम्य विद्यया वेदान्तज्ञानेनामृतं देवतात्मभावमश्नुते व्याप्नोति । तद्धत्यामृतमश्नुते यद्देवतात्मगमनम् ॥ ११ ॥

अधुना व्याकृताव्याकृतोपासनयोः समुच्चिचीषया प्रत्येकं निन्दो-

च्यते—अन्धं तम इति । अन्धं तमः प्रविशन्ति के येऽसंभूतिं संभवनं संभूतिः सा यस्य कार्यस्य संभूतिस्तस्या अन्याऽसंभूतिः प्रकृतिः प्रक्रियते कार्यं यया प्रकृतिः कारणमव्याकृताख्यां तामसंभूतिमव्याकृताख्यां प्रकृतिकारणमविद्यां कामकर्मबीजभूतामदर्शनात्मिकामुपासते ते तदनुरूपमेव फलं तमोऽदर्शनात्मकं प्रविशन्ति । ततस्तस्मादपि भूयो बहुतरमिव तमः प्रविशन्ति । के ये उ एव संभूत्यां रताः संभूत्यां कार्यब्रह्माणि हिरण्यगर्भाख्य एव रतास्ते भूय इव तमः प्रविशन्ति ॥ १२ ॥

अथाधुनोपासनयोः समुच्चयकरणायावयवफलभेदमाह—अन्यदेवाऽऽहुरिति । अन्यदेव पृथगेवाऽऽहुः फलं संभवात्संभूतेः कार्यब्रह्मोपासनादणिमाद्यैश्वर्यलक्षणं फलमाहुर्वेदाः । तथाऽन्यदाहुरसंभवादसंभूतेरव्याकृतादव्याकृतोपासनादन्यदेव फलमाहुः । अन्धं तमः प्रविशन्तीति शुश्रुम श्रुतवन्तो वयं धीरा ये नस्तद्विचचक्षिरे । य आचार्या धीराणां वचनं विचचक्षिरे व्याकृताव्याकृतोपासनफलवचनं व्याख्यातवन्त इत्यर्थः ॥ १३ ॥

यत एवमतः समुच्चयः संभूत्योर्युक्त एवैकपुरुषार्थत्वादित्याह— संभूतिं च विनाशं च यस्तद्वेदोभयꣳ सह विनाशेन मृत्युर्नाशो धर्मो यस्य स तेन विनाशधर्मणा हिरण्यगर्भोपासनेनैश्वर्यप्राप्तिद्वाराऽनैश्वर्यधर्मकामादिदोषजातं च मृत्युं तीर्त्वा संभूत्या । अत्राकारलोपश्छान्दसः । असंभूत्याऽसंभूत्युपासनयाऽव्याकृतोपासनेनामृतं प्रकृतिलयलक्षणं कारणत्वप्राप्तिलक्षणममृतमश्नुत इति ततश्च पुनः संसारो भवतीत्येवमपरं विद्याकर्मसमुच्चये फलमभिहितम् । तत्र को मोहः कः शोक एकत्वमनुपश्यत इति । स्वतन्त्रस्य सर्वकर्मसंन्यासपूर्वस्य सम्यग्ज्ञानस्य फलमभिहितमेवं द्विप्रकारः प्रवृत्तिनिवृत्तिलक्षणो वेदार्थोऽनेन प्रकाशितः । प्रवृत्तिलक्षणस्य वेदार्थस्य विधिप्रतिषेधलक्षणस्य कृत्स्नस्य प्रकाशने प्रवर्ग्यान्तं ब्राह्मणमुपयुक्तम् । निवृत्तिलक्षणस्य प्रकाशने विद्यामुपासत इति । तत ऊर्ध्वं बृहदारण्यकं तत्रापि प्राणादिविषयोपासनं न परं किंचिदन्यन्निर्गुणब्रह्मपरमिति विभज्य दर्शनीयम् । कार्यं सगुणब्रह्मोपासनावाक्यजातं चान्धं तमः प्रविशन्ति येऽविद्यामुपासत इत्यादिषण्मन्त्रप्रकाशितार्थस्य प्रकाशन उपयुक्तमितरत्सर्वं निर्गुणतत्त्वैकनिष्ठमिति ।

विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥

इति यदुक्तं तत्र केन मार्गेणामृतत्वमश्नुत इत्यर्चिरादिमार्गेणेत्युच्यते ॥ १४ ॥

एवं यथोक्तोपासनं कुर्वन्नुपासकः स्वदेहस्यान्तकाले प्राप्त आत्मनोऽमृतत्वप्राप्तिद्वारभूतमादित्यं याचते—हिरण्मयेन पात्रेणेति । आदित्यदेवत्याऽनुष्टुब्हे पूषन्हे सूर्यास्मत्पोषक हिरण्मयेन ज्योतिर्मयेन पात्रेणाऽऽधारभूतेन सत्यस्याऽऽदित्यमण्डलस्थस्य ब्रह्मणोऽपिहितं मुखं द्वारमपिहितम् । हिरण्मयेन पात्रेण द्वारस्यापिधानं कृतम् । अतस्तत्त्वं पूषन्नपावृणु पूर्वस्वत्पिधानं त्वमपावृण्वपगमय । सत्यधर्माय सत्यस्य तवोपासनादहमपि सत्यधर्मो जातः । सत्यं धर्मो यस्य स सत्यधर्मा तस्मै सत्यधर्माय मह्यं तदपावृणु । यद्वा व्यत्ययः । सत्यधर्माय सत्यधर्मस्य तद्दृष्टये । १५ ॥

पूषन्नेकर्ष इति । सूर्यदेवत्या त्रिष्टुप्पोषणात्पूषा रविस्तत्संबोधनं ह एकर्षे त्वया सर्वस्य संयमनाद्यमो हे यम सूर्य सुष्ठूवीरणात्सूर्यस्तत्संबोधनं प्रजापतेरपत्यं प्राजापत्यस्तत्संबोधनं हे प्राजापत्य । एवं संस्तुय प्रार्थयते–व्यूह रश्मीनिति । रश्मीन्व्यूह विगमय समूह तेजस्तेजस्तापकं यज्ज्योतिस्तज्ज्योतिस्तत्समूहमेकी कुरु । यत्ते रूपं कल्याणतमं तत्ते पश्यामि ते तव यत्कल्याणतमं मङ्गलतमं रूपं तत्ते तव प्रसादात्तद्रूपमहं पश्यामि । किंच योऽसावसौ पुरुषः सोऽहमस्मि । योऽसौ मण्डलस्थो व्याकृतावयवो यः पुरुषः पुरुषा आहुः पूर्णत्वाद्वा पुरुषः सोऽहमस्मीत्यादित्यमेकीकृत्य पश्यामीति ॥ १६ ॥

एवं ब्रह्मोपासकस्य योगिनः शरीरपातोत्तरकालं शरीरं यद्भवति तदाह–वायुरनिलमिति । लिङ्गोक्तदेवत्यं यजुर्वायुः प्राणोऽनिलं सूर्यात्ममृतमधिदैवतं स्वप्रकृतिं हिरण्यगर्भाख्यं प्राणं प्रतिपद्यते । अथानन्तरमिदं प्रतीयमानं शरीरमग्नौ हुतं भस्मान्तं भवति। कृतप्रयोजनत्वात् । इदानीं योगिनो बलभूतं सर्ववेदसारं सर्ववेदमयमक्षरं कथ्यते–ओमिति । अवतेराप्नोतेर्वा । ओमिति परमाक्षरस्य योगिनो बलभूतस्य परस्य ब्रह्मणः प्रणवाख्यस्य स्थूलादिगुणयुक्तस्य ब्रह्मा ऋषिश्छन्दो गायत्रं परमात्मा देवता । शब्दब्रह्मारम्भे विनियोगः । अपि च यागहोमादिषु शान्तिपौष्टिककर्मसु चान्येष्वपि काम्यनैमित्तिकादिष्वपि सर्वेष्वस्योंकारस्य विनियोगः। ओमिति परब्रह्मणो नामानिर्देशः । ओं तद्ब्रह्मेत्यादिश्रुतेः । ब्रह्मविष्णुशिवपरब्रह्मात्मकोऽकारोकारमकारार्धमात्रात्मकोऽयमों-

कार एवान्त्यकाल उच्चारक इति दर्शयति—आत्मरूपश्च ॐकारस्ततस्तेन ततम् । इदानीं कृतं स्मारयति—कृतं स्मर, इति । लिङ्गोक्तदेवत्यं यजुः । क्रतो क्रतुः संकल्पोऽनेन संकल्पविषयो योगिभिर्लक्ष्यते । हे क्रतो हे श्रीभगवन्नग्ने स्मर कृतं ब्रह्मचर्ये मया कृतं तत्स्मर न विस्मर्तव्यम् । हे क्रतो गार्हस्थ्ये मया यत्कृतं तच्च स्मर । पुनश्च यत्साधु कृतं तत्सर्वं कृतं स्मर कृतं स्मरेति । आदरार्थं पुनर्वचनम् । अथवा क्रतुशब्देन यज्ञः संबोध्यते । हे क्रतो हे यज्ञ । यज्ञशब्दोपलक्षितो यज्ञाध्यक्षो यज्ञहविर्भागभुक् श्रीभगवान्विष्णुः संबोध्यते श्रीभगवन्विष्णो कृतं स्मर मया कृतं त्वया कारितं स्मर कृतं स्मर कृतं स्मरेति ॥ १७ ॥

मार्गं याचते—अग्ने नयेति । आग्नेयी त्रिष्टुप् । हे श्रीभगवन्नग्ने हे सर्वज्ञ नय सुपथा । दक्षिणमार्गनिवृत्त्यर्थं सुशब्दः । शोभनेन मार्गेण देवयानेनास्मान्नय प्रापय । राये धनाय कर्मज्ञानफलोपभोगाय वा । अस्मान्यथोक्तज्ञानकर्मकारिणो नयेति संबन्धः । हे देव विश्वानि सर्वाणि वयुनानि कर्माणि प्रज्ञानानि तदनुष्ठितानि च विद्वाञ्ज्ञानवांस्त्वं सुपथा नयेति संबन्धः । किंच युयोध्यस्मज्जुहुराणमेनः । अस्मदस्मत्तः सकाशाज्जुहुराणं कुटिलं कुटिलवञ्चनात्मकमेनस्तत्कृतं चैनः पापं युयोधि योधय पृथक्कुरु । तत्ते विशुद्धाः सन्त इष्टं फलं प्राप्नुयामेत्यभिप्रायः । किंतु वयमिदानीं किमपि कर्तुं न शक्नुमः । अपि तु भूयिष्ठां बहुतरां नमउक्तिं नमस्कारवचनं ते तुभ्यं विधेम कुर्मः । केवलनमस्कारवचनेन परिचरेमेत्यर्थः ॥ १८ ॥

वन्देऽहं मङ्गलात्मानं भास्वन्तं वेदविग्रहम् ।
याज्ञवल्क्यं मुनिश्रेष्ठं कृष्णं हरिहरं प्रभुम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीवासुदेवपुरीपूज्यपादपरमकारुण्यासादितश्रीकृष्णभक्तिसाम्राज्यस्य श्रीमज्जातवेदभट्टोपाध्यायस्य सूनुना चतुर्वेदिश्रीमदानन्दभट्टोपाध्यायेन विरचिते काण्ववेदमन्त्रभाष्यसंग्रहे चत्वारिंशोऽध्यायः ॥ ४० ॥

॥ ॐ तत्सत् ॥

# अथानन्ताचार्यकृतमीशावास्यभाष्यम् ।

सर्ववेदैकसंवेद्यं हरिं देवशिखामणिम् ।
देशतः कालतश्चैव गुणतोऽनन्तमाश्रये ॥
चत्वारिंशे त्विहाध्याये परमात्मनिरूपणम् ।
क्रियते शोकमोहादिवर्जितैः परलक्षणैः ॥

ईशा वास्यमित्यस्याध्यायस्य कर्मसु विनियोगो नास्ति । किंतु शुद्धत्वैकत्वापापविद्धत्वाशरीरत्वसर्वगतत्वाद्यात्मयाथात्म्यप्रतिपादकत्वम् । तस्माद्विहितकर्मणा शुद्धान्तःकरणस्याधिकारिण आत्मस्वरूपप्रकाशेन शोकमोहादिसाधनमज्ञानं निवर्त्य स्वरूपं दर्शयतीत्यभिधेयसंबन्धप्रयोजनवानिति व्याख्यायते । ईशा वास्यमात्मदेवत्योऽनुष्टुप्छन्दस्कोऽध्यायो दध्यङ्ङाथर्वण ऋषिर्द्रष्टा । गर्भाधानादिसंस्कारसंस्कृतमधीतवेदं जनितसुतं यथाशक्तिकृतयज्ञं निष्पापं निःस्पृहं यमनियमोपेतं मुमुक्षुमुपसन्नं शिष्यं पुत्रं वा ऋषिरुपदिशन्नाह—ईशेति । ईश ऐश्वर्ये क्विबन्त ईष्टे इतीट् । सर्वस्येशिता परमेश्वरः । स हि सर्वजन्तूनामात्मत्वात्सर्वमीष्टे । तेनाऽऽत्मनेशा परमेश्वरेणेदं सर्वं प्रत्यक्षप्रमाणसिद्धं विश्वं वास्यम् । वस आच्छादने । ऋहलोर्ण्यदिति ण्यत्प्रत्ययो णित्त्वात्स्वरितः । आच्छादनीयं सर्वं तेन व्याप्तमित्यर्थः । स एवाधस्तात्स एवोपरिष्टात् । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इत्यादिश्रुतेः । यद्वा—इदं सर्वमीशा परब्रह्मणा वास्यं वस निवासे वासितमुत्पादितं स्थापितं नियमितं च । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यमयत्येष त आत्माऽन्तर्याम्यमृत इत्यादिश्रुतेः । न केवलं प्रत्यक्षगम्यमीशा वास्यमपि तु सावरणं ब्रह्माण्डमित्याह—यदिति । यत्किंचिच्छ्रुतिप्रमाणसिद्धं जगत्यां जगत् स्थावरजंगमात्मकं शेषं विश्वमीशेनोत्पादितं स्थापितं नियमितं चेत्यर्थः । अतः कारणात्तेनेशा त्यक्तेन विसृष्टेन दत्तेन स्वादृष्टानुसारिणा विषयेण भुञ्जीथा भोगाननुभवेः । इतोऽधिकं मा गृधो गृधु अभिकाङ्क्षायां मा काङ्क्षीः । इतो ममाधिकं भवत्विति धियं त्यजेत्यर्थः । परमात्माधीनत्वेन स्वादिच्छाया व्याहतत्वादिति भावः । एवं सद्धनं कस्यस्विदिस्विदिति निपातो वितर्के । न कस्यापीत्यर्थः । स एष सर्वस्य वशी सर्वस्येशानः सर्वमिदं प्रशास्ति यदिदं

किंचेत्यादिश्रुतेर्मुख्यदाता परमेश्वरो न स्वामिसंबन्धालिङ्गितमन्यत्प्राणिजातमिति वैराग्येण भवितव्यमिति तात्पर्यम् ॥ १ ॥

इदानीं चित्तशुद्ध्यर्थं विहितमवश्यमनुष्ठेयमित्याह—कुर्वन्नेवेति । कर्माण्यग्निहोत्रादीनि निष्कामाणि मुक्तिहेतुकानि कुर्वन्नेवेह लोके शतं समाः शतवर्षपर्यन्तं जिजीविषेत् । पुरुषव्यत्ययः प्रकरणात् । त्वं जिजीविषेर्जीवितुमिच्छेः । भवान्जिजीविषेदिति वा । पुरुषायुषस्य शतवर्षमितत्वाच्छतग्रहणम् । कालाध्वनोरत्यन्तसंयोग इति द्वितीया । यावच्छक्ति कर्तव्यं न कदाऽपि त्याज्यमिति ।

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ इति ।
ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा मनीषिणः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥

इति भगवद्वचनात् । त्वयीति विभक्तिव्यत्ययस्त्वय्येवं कर्म कुर्वतो जिजीविषतो मुक्तिरस्तीति शेषः । इतः प्रकारादन्यथा प्रकारान्तरेण मुक्तिर्नास्तीत्ययमभिप्रायः । स्वर्गादिप्राप्तौ यथा नानोपायाः सन्ति न तथा मुक्तावित्यर्थः । ब्रह्मार्पणबुद्ध्या कृतकर्मणा शुद्धान्तःकरणस्यैव मुक्तिरिति भावः । ननु कर्मणोऽवश्यं फलेन भाव्यं कथं मुक्तिरित्याह—न कर्मेति । मुक्त्यर्थं क्रियमाणं कर्म नरे मनुष्ये त्वयि न लिप्यते न बध्यते । स्वोचितेनासंकल्पितफलेन कर्मणा भगवन्तमाराधयन्तं नरमपि त्वां न प्रागुत्तरकर्म बाधत इत्यर्थः । मुक्तिकारणान्तःकरणशुद्ध्यापादकत्वेनोपक्षीणशक्तित्वात् । उक्तं हि—

द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः ।
प्रवृत्तिलक्षणो धर्मो निवृत्तौ च विभाषितः ॥ इति ॥ २ ॥

अथ काम्यपरान्निन्दति—असुर्या इति । ये के च ये केचिज्जना आत्महन आत्मानं घ्नन्ति संसारे संबन्धयन्तीत्यात्महनोऽविद्वांसः काम्यकर्मपरा आत्महन्तारस्ते प्रेत्य मृत्वा ताँल्लोकानभिगच्छन्ति । आभिराभिमुख्ये । ते के । ये लोका असुर्या असुराणामिमेऽसुर्या असुषु प्राणेष्वेव रमन्त इत्यसुराः प्राणपोषणमात्रपरा अज्ञानिनः केवलविषयासक्तास्तैः प्राप्या असुर्याः । कीदृशाः अन्धेन तमसाऽज्ञानात्मकेन तमसाऽऽवृता

आच्छादिता अज्ञानाधिक्यकारिणोऽनात्मज्ञाः पुनः पुनर्जायन्ते म्रियन्ते चेत्यर्थः । उक्तं हि भगवता श्रीगीतायाम्—

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ इति ।
अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ इति ।

तस्माद्यथायोगं वर्णाश्रमविहितकर्मणा भगवन्तमाराधयंस्तत्प्रसादेन निवृत्तस्वान्तःकलुषो जातवैराग्य आत्मविन्मुक्तो भवतीति प्रघट्टकार्थः ॥३॥

ब्रह्मविदाप्नोति परं तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते । एवं त्वयि नान्यथेतोऽस्तीत्यादिश्रुतिभिर्ब्रह्मज्ञानमेव मोक्षसाधनमित्युक्तम् । तद्ब्रह्म किंविधमित्यत आह—अनेजदिति । त्रिष्टुप्छन्दस्केयमृक् । तद्ब्रह्मानेजत् । एजृ कम्पने नैजतीत्यनेजत् । अकम्पमानोऽभयमचलदिति केचित् । तथात्वे न मनसो जवीय इत्युत्तरविरोधोऽजरोऽमृतोऽभयो ब्रह्मेति श्रुतेश्च । एकं समाधिकरहितम् । न तत्समश्चाभ्यधिकश्च दृश्यत इति श्वेताश्वतरोक्तेः । यद्वा सर्वभूतेषु विज्ञानघनरूपेणैकम् । एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मेति श्रुतेः । मनसो जवीयो मनो हि वेगवत्प्रसिद्धं ततोऽपि जवीयो वेगवत्तरं जवोऽस्यास्तीति जववदत्यन्तं जववदिति जवीय ईयसुनि कृते विन्मतोर्लुगिति मतुपो लुग्देहस्थस्य मनसो दूरस्थब्रह्मलोकादिसंकल्पनं क्षणमात्राद्भवतीति मनसो वेगवत्तरत्वं तस्याप्यगम्यत्वाद्ब्रह्म मनसो जवीय इत्युपपद्यते । किंच देवा ब्रह्माद्या अप्येनद्ब्रह्म नाऽऽप्नुवन्काल्त्स्न्येनाजानन् । देवा द्योतमानाश्चक्षुरादयोऽप्येतन्नाऽऽप्नुवन्न गोचरी कुर्वन्तीति केचित् । तत्तु मनोगम्यत्वादेवापीह स्थितम् । पूर्वं सर्वजगत्कारणम् । यतो वा इमानि भूतानि जायन्त इति श्रुतेः । अर्षत् ऋष गतौ, अर्षतीत्यर्षज्ज्ञानस्वरूपं सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः । किंच लोकविलक्षणम् । लक्षणान्तरमाह—तिष्ठदिति । तिष्ठतीति तिष्ठत्स्वस्थाने स्थितमपि सर्वगतत्वाद्धावतो द्रुतं गच्छतोऽन्यान्मनआदीनत्येत्यतिक्रम्य तिष्ठत्यचिन्त्यशक्तिकमित्यर्थः । किंच मातरिश्वा मातर्यन्तरिक्षे श्वयति वर्धत इति मातरिश्वा वायुः । टुओश्वि गतिवृद्ध्योरिति धातुः । तस्मिन्ब्रह्मण्यपः कर्माणि दधाति धारयति । अप इति कर्मनाम । कार्यकारणजातानि यस्मिन्नोतानि प्रोतानि यश्च सूत्रसंज्ञः

सर्वस्य जगतो विधारयिता सर्वप्राणभृच्चेष्टकः सोऽपि वायुः प्राणिनां चेष्टालक्षणानि कर्माणि तस्मिन्ब्रह्मणि स्वाधिष्ठाने सति दधाति । सर्वचेष्टको वायुस्तस्यापि चेतयितृ ब्रह्मेत्यर्थः । भीषाऽस्माद्वातः पवत इत्यादिश्रुतेः । यद्वा मातरिश्वा वायुरपः कर्माण्याप्यन्ते प्राप्यन्ते सुखदुःखानि याभिस्ता अपः कर्माणि । आप्नोतेर्ह्रस्वश्चेति क्विप्, धातोर्ह्रस्वश्च । तानि कर्माणि यज्ञहोमादीनि यस्मिन्दधाति स्थापयति । सर्वप्राणिकर्माणि समर्पयतीत्यर्थः । देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं नो देवदेवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वातेधा इति समिष्टयजुर्मन्त्रे वायुस्थत्वोक्तेः सर्वकर्माणि तावद्वायौ स्थाप्यन्ते । समष्टिव्यष्टिरूपोऽसौ वायुरपि तानि सर्वाणि तस्मिन्दधात्यतो यागहोमादीनां कर्मणां परमास्पदत्वं ब्रह्मलक्षणमित्यर्थः ॥ ४ ॥

रहस्यं सकृदुक्तं न चित्तमारोहतीति पूर्वमन्त्रोक्तमपि पुनर्वदति—तदिति । अनुष्टुप् । तत्प्रकृतमात्मतत्त्वमेजति चलति तदेव नैजति च । स्वतो नैव बिभेति । अभयमेव सन्मूढदृष्ट्या बिभेति च । यद्वैजतिरन्तर्भावितण्यर्थः । तदेजयति दुष्टांस्तदेव नैजयति सद्व्यवहारानिति शेषः ।

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ इति स्मृतेः ।

किंच तद्दूरे दूरदेशेऽस्ति तदु तदेवान्तिके समीपेऽप्यस्ति । सर्वगतत्वात् । यद्वा तद्दूरेऽविदुषामब्दकोट्याऽप्यप्राप्यत्वाद्दूर इवेत्यर्थः । तद्वन्तिके विदुषां हृद्यवभासमानत्वादन्तिक इव न केवलं दूरेऽन्तिकेऽस्ति । किंत्वस्य सर्वस्य नामरूपक्रियात्मकस्य जगतोऽन्तरभ्यन्तरे तदेवास्ति । अस्य सर्वस्य बाह्यतो बहिरपि तदु तदेवास्त्याकाशवद्व्यापकत्वात् । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इति श्रुतेः । यद्वाऽस्य मन्त्रस्यार्थान्तरम् । पूर्वं कारणरूपमुक्तमिदानीं कार्यरूपमुद्दिशति—तदिति । तदात्मतत्त्वमेजति सर्वजन्तुरूपेण स्थितं सच्चलति तदेव नैजति स्थावररूपावस्थं न चलति तद्दूर आदित्यनक्षत्ररूपेण स्थितत्वात् । तदु अन्तिके धरादिरूपेण स्थितत्वात् । अस्य सर्वस्य प्राणिजातस्यान्तर्मध्येऽन्तर्यामिरूपेण स्थितं तदेव । यो विज्ञाने तिष्ठन्विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानꣳ शरीरं यो विज्ञानमन्तरो यमयतीति श्रुतेः । अस्य सर्वस्य जगतो बाह्यतस्तद्वु तदेव । कालरूपेण विद्यमानत्वात् । अन्तर्बहिः पुरुषः कालरूप इति

स्मृतेः । चेतनाचेतनरूपमनन्तं ब्रह्मैवेत्यर्थः । एवमुपासितुरर्चिरादिमार्गेण गमनं नास्ति । इहैव ब्रह्मप्राप्तिः । न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते । ब्रह्मैव सन्ब्रह्माप्येतीत्यादिश्रुतेः । वद्न्तिक इत्यत्र, उकारोऽपृक्तोऽस्पर्शादिति प्रातिशाख्येन संधिः ॥ ५ ॥

अथोपासनाप्रकारमाह-यस्त्विति । अनुष्टुप् । यः पुनरधिकारी सर्वाणि भूतान्यव्यक्तादिस्थावरान्तानि चेतनाचेतनान्यात्मन्सप्तम्या लुगात्मन्येवानुपश्यति ब्रह्मण्येव सर्वाणि भूतानि स्थितानीति जानाति । आत्मानं च सर्वभूतेष्वनुपश्यति । ततस्तस्माद्दर्शनान्न विजुगुप्सते जुगुप्सां नाऽऽप्नोति । मुक्तो भवतीत्यर्थः । उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे । गुप्तिजोर्गुप्तिज्किद्भ्यः सन्निति स्वार्थे सन्प्रत्ययः ।

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥

इति भगवद्वचनसमानार्थको मन्त्रोऽयम् ॥ ६ ॥

इममेवार्थं द्वितीयो मन्त्रो वदतीत्याह–यस्मिन्निति । अनुष्टुप् । यस्मिन्नवस्थाविशेषे विजानतः सर्वाणि भूतान्यात्मनि सन्ति । आत्मा च सर्वभूतेष्वस्तीति विशेषेण ज्ञानवतः पुरुषस्य सर्वं खल्विदं ब्रह्मेत्यादिवाक्यार्थविचारेण सर्वाणि भूतान्यात्मैवाभूत्, भवन्ति सर्वभूतेष्ववस्थित आत्मैक एवेति ज्ञानं भवति ।

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ इति भगवदुक्तेः ।

तत्रावस्थाविशेष एकत्वमात्मैकत्वमनुपश्यतस्तस्य को मोहः कः शोकश्चाविद्याकार्ययोः शोकमोहयोः सर्वथाऽसंभवात्सकारणकस्य संसारस्यात्यन्तमुच्छेद इति भावः ।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ इति श्रुतेः ॥ ७ ॥

एवंभूतात्मज्ञानिनः फलमाह—स इति । जगती । योऽधिकारी पूर्वोक्तप्रकारेणाऽऽत्मानं पश्यति स ईदृशमात्मानं पर्यगात्प्राप्नोति । छन्दसि लुङ्लङ्लिट् इति सूत्राद्वर्तमाने लुङ् । कीदृशम् । शुक्रं शुक्लं शुद्धं रलयोरभेदाद्विज्ञानानन्दस्वभावम् । अकायं न विद्यते भोगार्थं कायः शरीरं यस्य सः । तमकायत्वादेवात्रणमच्छिद्रं पूर्णमित्यर्थः । अस्नाविरं

न विद्यन्ते स्नावाः शिरा यस्य सोऽस्नाविरस्तम्। अकायमित्यनेन लिङ्गशरीरनिषेधः। अस्नाविरमिति स्नावोपलक्षितधातुमयस्थूलशरीरनिषेध इत्यपुनरुक्तिः। अत्रैव हेतुगर्भविशेषणमाह–शुद्धमनुपहतं सत्त्वरजस्तमोभिः। एतदेव स्पष्टयति—अपापविद्धं न पापैर्विद्धं क्लेशकर्मविपाकाशयैरस्पृष्टमीदृशमात्मानं ज्ञानी पर्यगादित्यन्वयः। कायादिरहितोऽपि परमात्मा जगत्सर्जनादि करोत्यचिन्त्यशक्तित्वादित्याह–कविरिति। ज्ञानी यं पर्येति स आत्मा शाश्वतीभ्यः समाभ्यः शाश्वतीषु समासु विभक्तिव्यत्ययः। याथातथ्यतो यथातथाभावो याथातथ्यं याथार्थ्यं तेन यथार्थस्वरूपानर्थान्पदार्थान्व्यदधाद्विदधाति। कीदृशः सः। कविः क्रान्तदर्शी सर्वज्ञो मनीषी मेधावी ज्ञानस्वरूपः परिभूः परिभवति सर्वं वशी करोतीति परिभूः। स्वयंभूः स्वयमेवान्यदनपेक्ष्य भवतीति स्वयंभूः स्वतन्त्रः। कविरित्युत्तरार्धमुपासितुः फलकथनपरमिति केचिद्व्याचक्षते तत्प्रक्रमभङ्गादुपेक्ष्यम् ॥ ८ ॥

इदानीं पूर्वोक्तप्रकारेणानात्मविदः कर्मनिष्ठाः सन्तः कर्म कुर्वन्त एव ये जिजीविषन्ति तान्प्रत्युच्यते—अन्धं तम इति। षडनुष्टुभः। विद्याविद्ययोः समुच्चिचीषया प्रत्येकं निन्दोच्यते। ये जना अविद्यां विद्याया अन्याऽविद्या कर्म तां केवलामुपासते कुर्वन्ति स्वर्गार्थानि कर्माणि केवलमनुतिष्ठन्तीत्यर्थः। अविद्येत्यत्र तदन्यार्थे नञब्राह्मण इतिवत्। ते प्राणिभोऽन्धमदर्शनात्मकं तमोऽज्ञानं प्रविशन्ति संसारपरम्परामनुभवन्तीत्यर्थः। ततस्तस्मादन्धात्मकात्तमसः संसाराद्भूय इव। इव एवार्थः। बहुतरमेव तमस्ते प्रविशन्ति। ते के। य उ ये पुनर्विद्यायामात्मज्ञाने देवताज्ञान एव रताः कर्म हित्वा विहितकर्माननुष्ठानेन प्रत्यवाये सत्यन्तःकरणशुद्ध्यभावेन ज्ञानानुदयादिति भावः। अन्येऽमुं मन्त्रमन्यथा व्याकुर्वन्ति। यथा—आत्मयाथार्थ्यज्ञानस्यैवान्यथाज्ञाननिन्दयाऽऽवश्यकत्वोपपादनायान्यथाज्ञानस्योक्तमसुर्यलोकसाधनत्वमनूद्यान्यथाज्ञाननिन्दनस्य ततोऽप्यधिकानर्थसाधनत्वमन्येन मन्त्रेणोच्यते। न तु केवलकर्मनिन्दनं तदभावे विद्याया अध्यवसायत्वाभावात्केवलकर्मणामप्रसक्तेः। कुर्वन्नेवेह कर्माणि जिजीविषेदित्येवकरणं कर्मात्यन्तायोगव्यवच्छेदार्थेन केवलकर्मकरणविधानाभावाच्च। अत्रैवं योजना–येऽविद्यामन्यथाज्ञानमुपासते तेऽन्धं तमो नाम नरकं प्रविशन्ति। असन्नेव स भवति। असद्ब्रह्मेति वेद चेदिति श्रुतेः।

अथ ये जना विद्यायामु आत्मयाथार्थ्यज्ञान एव रता न त्वन्धतमः-साधनान्यथाज्ञाननिन्दने ते ततोऽन्यथाज्ञानं प्राप्य तमसः सकाशादभूय इव बहुतरमेवान्धं तमः प्रविशन्तीति । ९ ॥

ज्ञानकेवलकर्मणोः फलभेदमाह—अन्यदेवेति । विद्ययाऽऽत्मज्ञाने-नान्यदेव फलममृतरूपमाहुर्ब्रह्मवादिनः । अविद्यया केवलकर्मणा साध्य-मन्यदेव फलं पितृलोकादिरूपमाहुर्विद्वांसः । कर्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकानाꣳ श्रेष्ठस्तस्माद्विद्यां प्रशꣳसन्तीत्यादि-श्रुतेः । कथमेतदवगतमित्यत्र आह इतीति । इत्येवं शुश्रुम श्रुतवन्तो वयं धीराणां धीमतां वचनम् । य आचार्या नोऽस्मभ्यं तत्कर्म च ज्ञानं च स्वरूपफलतो विचचक्षिरे व्याख्यातवन्तस्तेषामयमागमः पारम्पर्या-गत इति भावः । द्वितीयपक्षे तु विद्ययाऽऽत्मयाथार्थ्यज्ञानेनान्यदेव मोक्षैकदेशलक्षणं फलं प्राप्यमाहुर्वृद्धा अविद्ययाऽन्यथाज्ञाननिन्द-याऽन्यदेव मोक्षैकदेशफलरूपं फलमाहुरिति धीराणां वचनं शुश्रुम । ये धीरा नोऽस्मान्प्रति तन्मोक्षसाधनं विचचक्षिरे व्याचचक्षिरे । तस्मादुपप-न्नः समुच्चय इति ॥ १० ॥

समुच्चयमाह—विद्यामिति । विद्याऽऽत्मज्ञानमविद्या कर्मान्यथाज्ञा-ननिन्दनं वा । यद्द्वयं परस्परसमुच्चयार्थम् । तदुभयं सह पुरुषार्थहेतुत्वेन यो वेद, एकेनैव पुरुषेणानुष्ठेयमिति जानाति सोऽविद्ययेश्वरार्पणबु-द्ध्याऽकृताग्निहोत्रकर्मणा मृत्युं मारकमन्तःकरणमलं तीर्त्वाऽन्तःशुद्ध्या कृतकृत्यो भूत्वा विद्ययाऽऽत्मज्ञानेनामृतं भावप्रधानो निर्देशः । अमृतत्वं मोक्षमश्नुते प्राप्नोति । उक्तं हि श्रीगीतायां भगवता—

> यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
> एकं सांख्यं च योगं च यः पश्यति स पश्यति॥ इति ।

सांख्ययोगशब्दौ ज्ञानकर्मपरौ ॥ ११ ॥

उक्तमेवमुत्तरमन्त्रत्रयेण समर्थ्यते—अन्धं तम इति । येऽविद्यामुपा-सते तेऽन्धं तमः प्रविशन्तीत्युक्तम् । तत्राविद्यास्वरूपमुच्यते—असंभूति-मिति । ये प्राणिनोऽसंभूतिं नास्ति संभूतिर्जगत उत्पत्त्यादिर्यस्मात्सोऽ-संभूतिस्तं संभूतेरुपलक्षणत्वात् । परमेश्वरो न जगदुत्पत्त्यादिकर्ताऽपि तु स्वभावत एवोत्पद्यतेऽवतिष्ठते नश्यतीत्यात्मानमुपासते तेऽन्धं तमः प्रविशन्तीत्यर्थः । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्तीत्यादिश्रुतेः । यत्प्रयन्त्यभिसंविशन्तीत्यादिश्रुतिविरुद्धत्वात् ।

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहेतुकम् ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।

मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ इति भगवदुक्तेश्च । अन्यत्पूर्ववत् । यद्वा यमनियमादिसंबन्धवान्विज्ञानात्मा कश्चिन्नास्ति । जलबुद्बुदवज्जीवाः । मदशक्तिवद्विज्ञानमित्यादिदुर्वादिनो बौद्धा अनेन निन्द्यन्ते । ये नरा असंभूतिं न संभूतिरसंभूतिस्तां मृतस्य पुनः संभवो नास्ति । अतः शरीरान्तेऽस्माकं मुक्तिरेवेति य उपासते सिद्धा-न्तयन्ति तेऽन्धं तमः प्रविशन्ति । तथा य उ ये च संभूत्यामेव रताः संभवत्यस्या इति संभूतिः परदेवता तत्रै-वाऽऽसक्ताः कर्मपराङ्मुखाः स्वबुद्धिमालिन्यमजानाना आत्मज्ञानमात्र एव रता आत्मैवास्ति नान्यत्कर्मान्यादीति कर्मकाण्डज्ञानकाण्डयोः संब-न्धो नास्तीत्यभिप्रायवन्त इत्यर्थः । ते नरास्ततोऽन्धात्तमसो भूय इव । इव-शब्दो निपातो बह्वर्थो बहुतरं तमो विशन्ति । यद्वा व्याकृताव्याकृतो-पासनयोः समुच्चिचीषया प्रत्येकं निन्दोच्यते । तेन यथा संभवनं संभूतिः कार्यस्योत्पत्तिस्तस्या अन्याऽसंभूतिः प्रकृतिः कारणमव्याकृताख्यं तामसंभूतिमव्याकृताख्यं प्रकृतिकारणम् । अविद्याकामकर्मबीजभूतामद-र्शनात्मिकां य उपासते ते तदनुरूपमेवान्धं तमः प्रविशन्ति संसारमेव प्राप्नुवन्ति । ये तु संभूत्यां कार्यब्रह्माणि हिरण्यगर्भादावेव रतास्ते ततस्तस्मादपि भूयो बहुतरमेव तमः प्रविशन्ति ॥ १२ ॥

अथोभयोरुपासनयोः समुच्चयकारणमवयवतः फलभेदमाह—अन्य-देवेति । संभवात्संभूतेः कार्यब्रह्मोपासनादन्यदेव पृथगेवाणिमाद्यैश्वर्य-लक्षणं फलमाहुः कथयन्ति धीराः । तथाऽसंभवादसंभूतेरव्याकृतो-पासनादन्यदेव फलमुक्तमन्धं तमः प्रविशन्तीत्याहुः । क्लेशोऽधिकतर-स्तेषामव्यक्तासक्तचेतसामिति भगवदुक्तेः । इत्येवंविधं धीराणां धीमतां वचः शुश्रुम वयं श्रुतवन्तो ये धीरा नोऽस्माकं तत्पूर्वं संभूत्यसंभूत्यु-पासनफलं विचचक्षिरे व्याख्यातवन्तः ॥ १३ ॥

उक्तं सर्वमुपसंहरति—संभूतिं चेति । संभूतिं सकलजगत्संभवैकहेतुं परब्रह्म विनाशं विनाशोऽस्यास्तीति विनाशम् । अर्शआदिभ्योऽजि-

स्यच्प्रत्ययः । विनाशधर्मकं शरीरादिसंसारं तदुभयं शरीरिशरीररूपं द्वयं यो योगी सहैकीभूतं वेद जानाति । नित्यानित्यं वस्तु विवेचयतीत्यर्थः । देहभिन्नोऽहं देही वाऽऽसं कर्मनिमित्तमिति ज्ञात्वा शरीरेण ज्ञानोत्पत्तिकराणि निष्कामकर्माणि कृत्वेश्वरेऽर्पयतीति भावः । स ज्ञानी विनाशेन विनाशवता शरीरेण सात्त्विककर्मानुष्ठानद्वारा मृत्युं तीर्त्वाऽन्तःकरणशुद्धिं संपाद्य संभूत्याऽऽत्मज्ञानेनामृतत्वमश्नुते मुक्तिं प्राप्नोति । यद्वाऽस्या अर्थान्तरम् । यथा—संभूत्यसंभूत्युपासनयोरेकपुरुषार्थत्वात्समुच्चय एव युक्त इत्याह—संभूतिं चेति । अत्र विनाशं विनाशे[ने]तिशब्दद्वयेऽवर्णलोपो द्रष्टव्यः । पृषोदरादित्वात्साधुरन्यदाहुरसंभवादिति प्रकरणात् । संभूतिं विनाशं च व्याकृताव्याकृतोपासनद्वयं यः सह वेदोभयमुपास्त इत्यर्थः । स योग्यविनाशेनाव्याकृतोपासनेन मृत्युमनैश्वर्यमधर्मकामादिदोषजातं च तीर्त्वाऽतिक्रम्य संभूत्या हिरण्यगर्भोपासनेनामृतं प्रकृतिलक्षणमश्नुते प्राप्नोति । यद्वा संभूत्या संभवतीति संभूतिर्हिरण्यगर्भादिदेवता तया संभूत्या संभूत्युपासनया मृत्युमन्तःकरणमलादिरूपं तीर्त्वाऽतिक्रम्याविनाशेन विनाश उपलक्षणमुत्पत्तिविनाशादिदोषरहितेन परात्मना तज्ज्ञानेनामृतं मोक्षममश्नुत इति भिन्नक्रमेण पदयोर्व्याख्यानम् ॥ १४ ॥

एवं प्राप्ताधिकारं शिष्यं प्रति परमात्मस्वरूपं निरूप्य तत्साक्षात्कारो मोक्षसाधनमित्यतीतग्रन्थेनोक्तम् । स चेश्वरसाक्षात्कारो न श्रवणादिमात्रेण भवति । नापि मोक्षः साक्षात्कारमात्रेण किंतु भगवदनुग्रहादेव । नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वामिति श्रुतेः । अतोऽनुष्ठितश्रवणमननादिकेनापि साक्षात्कारार्थं प्राप्तसाक्षात्कारेणापि च मोक्षार्थं यथा भगवत्प्रार्थनं कार्यं तत्प्रकारप्रदर्शनार्था हिरण्मयेन पात्रेणेत्याद्युत्तरमन्त्राः । तत्राऽऽदित्यरूपोपासनमाह—हिरण्मयेन पात्रेणेति । अनुष्टुप् । हिरण्मयमिव हिरण्मयं ज्योतिर्मयं यत्पात्रं पिबन्ति यत्र स्थिता रश्मयो यत्र स्थितानिति पात्रं सूर्यमण्डलं तेन तेजोमयेन मण्डलेन सत्यस्याऽऽदित्यमण्डलस्थस्याविनाशिनः पुरुषोत्तमस्य श्रीभगवतो मुखं मुखमिति सर्वविग्रहोपलक्षणम् । लीलाविग्रहस्वरूपमपिहितमाच्छादितं वर्तते यत्तन्मुखं हे पूषन्पुष्णातीति पूषा तत्संबोधनं हे भक्तपोषक परमात्मंस्त्वमपावृणवपावृतमनाच्छादितं कुरु । किमर्थं, सत्यधर्माय दृष्टये ।

सत्यं सत्यज्ञानानन्दात्मकं त्वद्रूपं धारयति हृदये चिन्तयतीति सत्यधर्मा तस्मै। चतुर्थी षष्ठ्यर्थे। सत्यधर्मस्य मदादिभक्तजनस्य दृष्टये दर्शनाय साक्षात्काराय। दृशिर् प्रेक्षणेऽस्माद्भावे क्तिन्प्रत्ययः। व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां ष इति शस्य षत्वं ष्टुना ष्टुरिति ष्टुत्वमित्यृषिप्रार्थनम् ॥ १५ ॥

एतदेव स्पष्टीकृत्य ऋषिर्याचते—पूषन्निति। उष्णिग्यजुरन्तोष्णिक्त्रिपदाऽन्त्यो द्वादशक इति वचनात्। हे पूषन्‌ हे एकर्षे। एकश्चासावृषिश्चैकर्षिः। ऋष ज्ञाने। हे मुख्यज्ञान हे यम यमयति सर्वमिति यमो योऽन्तरो यमयतीति श्रुतेः। हे सूर्य। सूरिभिर्ज्ञेयत्वात्स सूर्यः। सूरिशब्दात्तद्धितो यत्। यस्येति चेतीकारलोपः। हे प्राजापत्य। प्रजानां पतिः प्रजापतिर्हिरण्यगर्भस्तस्य वेदोपदेष्टृत्वेन प्रिय। यो ब्रह्माणं विदधाति पूर्वं तस्मै वेदांश्च प्रहिणोति सर्वानिति श्वेताश्वश्रुतेः। मदीयान्रश्मीन्प्रकाशयन्व्यूह तेजःसमूहं च स्वरूपं बाह्यं च मदीयं ज्ञानं विस्तारयेत्यर्थः। तथा यत्ते रूपं कल्याणतमं परममङ्गलं मङ्गलानां च मङ्गलमिति स्मृतेरस्ति तत्ते तव प्रसादादहं पश्यामि। यद्वा हे पूषन्नेकर्षे यम सूर्य प्राजापत्य प्रजापतेर्धर्मस्यापत्य नरनारायणात्मन्रश्मीन्मच्चक्षुष उपघातकान्स्वान्रश्मीन्व्यूह विगमय। तेज आत्मीयं ज्योतिःसमूहमुपसंहर मद्दर्शनयोग्यं कुरु। अन्यत्समानम्। केन प्रकारेण पश्यसीत्यत आह—य इति। योऽसौ पुरुषः पूर्षु शेतेऽसौ मण्डलान्तःस्थो यः पुरुषोऽसौ तदितरप्रतीकस्थितश्च पुरुषः सोऽहमस्मि भवामि सूर्यमण्डलादिप्रतीकस्थो मद्धृद्यन्तःस्थो ज्योतीरूपश्चैक एवेति प्रकारेण ते रूपं पश्यामीत्यर्थः। एतादृशैक्यज्ञानस्यैव मोक्षसाधनत्वादिति भावः। अत्रासौ च शाकटायन इति प्रातिशाख्ये न यवयोः पदान्तयोः स्वरमध्ये लोप इति प्राप्तलोपप्रतिषेधादसावसाविति द्रष्टव्यम् ॥ १६ ॥

इदानीं मरिष्यतो मम वायुरध्यात्मपरिच्छेदं हित्वाऽधिदैवतात्मानमनिलं प्रविशत्विति प्रार्थयते—वायुरनिलमिति। वायुरनिलं यजुषी। ओमितिपरमाक्षरस्य योगिनामालम्बभूतस्य परस्य ब्रह्मणः प्रणवाख्यस्यास्थूलादिगुणयुक्तस्य ब्रह्मा ऋषिश्छन्दो गायत्रं परमात्मा देवता शब्दब्रह्मारम्भविरामे च यागहोमादिषु शान्तिपौष्टिककर्मसु चान्येषु विनियोगोऽस्य कृतः। त्रिभिर्यज्ञान्योगी स्मारयतीत्यनुक्रमणी। हे परमात्मन्मरिष्यतो मम वायुः प्राणो वायुग्रहणं सप्तदशलिङ्गोपलक्षणार्थम्।

तथा च सप्तदशात्मकलिङ्गरूपः प्राणोऽध्यात्मपरिच्छेदं हित्वाऽधिदैवत-रूपं सर्वात्मममृतं सूत्रात्मानमनिलं मुख्यप्राणं प्रतिपद्यतामिति वाक्य शेषः । वायुर्वै गौतम तत्सूत्रेण वायुना हि गौतम तत्सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्तीति श्रुतेः । ज्ञानक-र्मसंस्कृतं लिङ्गमुत्क्रमयत्वित्यर्थः । अथानन्तरमिदं स्थूलशरीरमग्नौ हुतं सद्भस्मान्तं भस्मैवान्तो यस्य तद्भस्मान्तं भस्मावसानं भूयात्कृतप्रयोज-नत्वात् । ॐप्रतीकात्मकत्वात्सत्यात्मकमग्न्याख्यं ब्रह्माभेदेनोच्यते । ॐ हे क्रतो संकल्पात्मक स्मर यन्मम स्मर्तव्यं तस्यायं कालः समुप-स्थितोऽतः स्मर यत्त्वं ब्रह्मचर्ये गार्हस्थ्ये च मया परिचरितस्तत्स्मर । तथा कृतं यन्मया बाल्यप्रभृत्यद्ययावदनुष्ठितं कर्म तच्च स्मर क्रतो स्मर कृतं स्मरेति पुनर्वचनमादरार्थम् । यद्वा प्रत्यक्षत एव देहस्य भस्मान्त-त्वदर्शनाद्देहनाशे च तदन्तर्गतस्य ब्रह्मणो जीववन्मरणाद्यवश्यंभावादि-त्याशङ्कायामिदमुच्यते । अत्रायमर्थो यद्यपीदं शरीरं भस्मान्तं दृश्यते तथाऽपि तदन्तर्वर्तिनः परमेश्वरस्य न मरणादिदोषप्रसङ्गः । कुतो व्यत्य-यादनिलमनिलो वायुर्यदाऽमृतममृतोऽथ तदा ब्रह्मामृतमिति किं वक्तव्यं तदमृतत्वस्य कैमुत्यसिद्धत्वादिति । ननु संसारिणो वायोः कथममृतत्वं संभवति यदुपचारेण तर्हीश्वरस्यापि तथाविधममृतत्वं स्यादित्याशङ्क्य वायोर्देहनाशेऽपि तत्कार्यविज्ञानतिरोभावाभावोऽस्त्येव । वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति म्लोचन्ति ह्यन्या देवता न वायुः सैषाऽनस्तमिता देवता यद्वायुरिति बृहदारण्यकश्रुतेः । अथ प्रणवप्रतीकं प्रार्थयते—ओमिति । ॐ ओतत्वादिगुणयुक्त हे क्रतो ज्ञानरूप मां स्मर मया कृतं ध्यानादिकं च स्मर । अभ्यासस्तात्पर्यार्थः । अभ्यासेनार्थविशेषं मन्यत इति यास्कोक्तेः परमात्मकर्तृकं स्मरणं भक्तानुग्रहोन्मुखं त्वमेव । अवती-त्योम् । अव रक्षण इत्यस्माद्धातोरन्येभ्योऽपि दृश्यन्त इति मनिन् ततोऽवतेष्टिलोपश्चेति पञ्चमीनिर्देशादवतेः परस्य मनिनष्टिलोपे ... ज्वरत्वरास्रिव्यविमवामुपधायाश्चेति धातोरकारवकारयोरूठौ तयोः सव-र्णदीर्घे सति सार्वधातुकेति गुणे रूपसिद्धिर्धातोरन्तत्वादुदात्तत्वं त्रिमा-त्रत्वं प्रातिशाख्यात् ॥ १७ ॥

साक्षात्कारप्रार्थनानन्तरमग्निप्रतीकं भगवन्तं मोक्षं प्रार्थयते—अग्ने नयेति । अगस्त्यदृष्टाऽऽग्नेयदेवत्या अन्ते यज्ञान्योगी स्मारयतीति

कात्यायनस्मरणात् । हे देव क्रीडादिगुणविशिष्ट हेऽग्नेऽग्निप्रतीक भगव अस्मान्सुपथा शोभनेन मार्गेण देवयानलक्षणेन नय गमय । सुपथेति विशेषणं दक्षिणायनमार्गनिवृत्त्यर्थम् । यतो गतागतलक्षणेन दक्षिणायनमार्गेण निर्विण्णा वयं य(अ)तोऽग्ने त्वां याचामहे । पुनर्गमनागमनवर्जितेन शोभनमार्गेणास्मान्कर्मफलविशिष्टान्नय । सुपथेत्यत्र ऋक्पूरब्धूःपथामानक्ष इत्यप्रत्ययो नानित्यत्वात्समासान्तविधेः । वृद्धिरादैच् इतिवत् । किमर्थं, राये धनाय मुक्तिलक्षणाय । कीदृशस्त्वम् । विश्वानि सर्वाणि वयुनानि कर्माणि प्रज्ञानानि वा विद्वाञ्जानन्किंच जुहुराणं हुर्छा कौटिल्ये शानच्, जुहोत्यादित्वेन द्वित्वादौ सति रूपं । कुटिलं प्रतिबन्धवञ्चनात्मकमेनः पापमस्मदस्मत्तः सकाशाद्युयोधि पृथक्कुरु वियोजय नाशयेत्यर्थः । यु मिश्रणामिश्रणयोरदादित्वाच्छब्लोपद्वित्वे छान्दसं हेर्धित्वम् । ततो विशुद्धाय ते तुभ्यम् । अनुदात्तत्वायुष्मदादेशः । भूयिष्ठां बहुतरां नमउक्तिं नमस्कारवचनं विधेम कुर्वीम । ईदृशाभीष्टसाधकस्य तव प्रतिकरणं नमस्कारपरम्परैव न त्वन्यत्प्रत्युपकरणमस्तीति भावः । यद्वा हे देवाग्नेऽस्मान्सुपथा पुनरावृत्तिवर्जितेनार्चिरादिमार्गेण राये मोक्षाख्यवित्ताय नय मुक्तिदो भव । कुतो हे देव आसंसारमस्मदनुष्ठितानि विश्वानि पूर्णानि मोक्षाय पूर्वाप्तानि वयुनानि सत्कर्माणि । वयुनमिति कर्मनामेति निघण्टूक्तेः । यद्वा वयुनानि श्रवणमनननिदिध्यासरूपाणि ज्ञानानि भवान्वेद । त्वद्दत्तया वयुनयेति भागवते वयुनशब्दस्य ज्ञानार्थकत्वात् । ननु प्रारब्धकर्मभिर्बद्धस्य तव कथं मोक्ष इत्यत आह—अस्माज्जुहुराणमल्पान्कुर्वत् । संसारे परिवर्तयदित्यर्थः । ह्वृ चलन इति धातुः । छान्दसत्वेन ह्वादिरीदृशमेनः पापमनिष्टं कर्मेत्यर्थः । तदस्मदस्मत्तो युयोधि वियोजय । वयं च ते तुभ्यं भूयिष्ठां नमउक्तिं विधेम । न च प्रकारान्तरेण प्रतिकर्तुं शक्नुम इत्यर्थः ॥१८॥

इति चत्वारिंश एक एवानुवाकः ।

इदा० इति श्रीमन्नागदेवभट्टात्मजेन प्रथमशाखिना श्रीमदनन्ताचार्येण विद्वज्जनकृपापात्रभूतेन विरचितायां वेदार्थदीपिकायां काण्वशाखीयसंहिताभाष्ये चत्वारिंशोऽध्यायः ॥

॥ ॐ तत्सत् ॥